विधिनयालयादपि महत्तरं
नयासन शाश्वतं शंकरं
सम्राजं तत्रैव गत्वरं
भारयसे दुःसह

कति सम्राजः कालभक्षिताः
दैवकृतिरिति कचिदलक्षिता
हेतौ सति ननु तत्फलवत्ता
सहते न हि विरहं

मयि बन्धगते भारतपुत्राः
सन्तु विजयिनो वीरचरित्राः
अग्रयायिनो विरचितसत्राः
वधान मे देह

निभासराग । प्रथमभागे भारोप निवेदितः। द्वितीयात् प्रत्युत्तरम् । प्रजापीडनभार सम्राजा वाहयन्ति नयालयानि । तस्या उत्तरदायित्व सम्राज एव इह परलोके वा। सम्राजो न दैवगत्या विलय यान्ति । सति हेतौ फल अवश्यभावि । मे देह बध्यापि भारता स्वराज्यसमर न मुञ्चेयु ।

Notes विधिनयालय-Court of Law

# २७

महात्मना सह नायकस्य मतविरोध युद्धसहायतायाम् । तद्विव्रियते–(१९४१)

तव चरणे विहिता वन्दना
नेह तमोहा त्वया विना

सीमसमीपे चमू रिपूणां
भयं च हृदये देशवासिनां
निःशस्त्रकरैर्नो वाग्वीरैर्विधीयते जनवञ्चना

सत्यहीनता न हि मनसि कृता
मतो रक्षणे भूमेर्निरता
अहिंसापथे हरे सारथे मुक्तो रणान्नो विमोचना

शासकान्तरे नैव कामना
सर्वे परकीयास्तु समानाः
समरेण विना गुरो नाधुना भवेत् स्वराज्यार्जना

सप्रतियोगे न. सहकार्ये
शासनाधिपैः सहानिवार्ये
आशीर्वचसा यशःश्रेयसा सविहितेय याचना

क्षमस्व नो मार्गान्तरजविनः
विश्वसिति त्वयि सदाऽय जनः
त्वमेव नेता पुनरागन्ता लोकहिते ते प्रेरणा

---

मालवसराग । युद्धे सहायतापि न अहिंसातत्त्वच्युति । अपि तु अहिंसवाना अस्माकमपि सीमाप्रान्ते रिपौ आगते युद्ध अपरिहार्यमव । यतो अन्यदेशीया आङ्ग्लान् पराभूय अस्मच्छासका भवेयु तत्र न अस्माक लाभ सुख वा । अस्मत्सहकार्यं नु सप्रतियोगमेव स्यात् शासकै सह । शासकै यदि स्वायत्तता प्रदीयते तदैव न सहकार्यम् । नैव गुरो अविश्वास ।

Notes सप्रतियोग सहकार्य- Responsive Co-operation.

# २८

यत्रनियोगि महत्त्वार्थं नायकेन दित्सित न तच्छासनसमतम् । सहायता-वधीरणा न ते कुर्युरिति स वदति– (१६४१)

शासकाः ! मा धिक्कुरुत करं ५५०
मित्रतावृतं पुरतो हि धृतं नो विस्मृतवैरं

दुर्गमदीर्घो भवता पन्थाः
प्रबलरिपोर्भयचिन्तना पथाः
वयं सहायाः स्वतन्त्रतायाः संविदिताः सुचिरं

संरक्षायै स्वतन्त्रकृत्या
रणमारब्धं सर्वजगत्या
यत्ताछामुदयाः सन्तु त्वरया वगास्य सहसामर

अहिंसका अपि भारतवीराः
रणरङ्गाणा प्रथिताश्चतुराः
निश्चितसमराः खरप्रहारा जयन्तु सप्रसर

स्वतन्त्रतोपासका वदामः
भवता विजयैर्नात्र विरामः
रणे समाना जये समानास्तत्त्वमिदं रुचिरं

स्वतन्त्रराष्ट्रे न भवद्रिपुता
जये निबद्धा मियो मित्रता
शान्तिजीवने मित्रे भुवने निवसाम प्रचुर

सोहनीराग । समरे सहभागिनी इमे द्वे राष्ट्रे आङ्ग्लभूमिर्भारतभूमिश्च । विजयेऽपि तथैव द्वे स्वतन्त्रतावृते युक्ते ।

# २९

१९४२ खिस्ताब्दे अगस्तमासे राष्ट्रसभया 'अपेत भारतेभ्य' इति निर्धार आङ्ग्लानुद्दिश्य घोषित । स प्रस्तावो नायकेनैव उद्गीत ।

अपेहि सदनान्मे
मा विश्वासो नो हि सयमे

श्वेताः श्रेष्ठा इति मन्यन्ते
इतरे हीना यदि गण्यन्ते
भवन्मत महित हि दिगन्ते
तस्मिन् नैव रमे

सुवर्णभूमे. संसृतिसरणी
उच्छ्रितचेतोविषाणहरिणी
चिरगमानमानवतापरणी
नाभिरता विषमे

समाजरचना स्वबान्धवाना
भिन्ना च भवेत् प्राचीनाना
एषु मतेषु च दुरधीताना
विहरत मतिभ्रमे ५८०

भारतवसुधाया, एतस्या
शब्दभिरुदित कृत, निरस्या
अधुनाऽस्माभिरसौ हि समस्या
वयमुद्यता इमे

निर्गच्छेत न सामभाषणैः
स्यातापोह्याः शितप्रहरणैः
वयमहिंसकाः शस्त्रैर्मसृणैः
निपुणा सग्रामे

---

सोढीरण । यादृशं निजदेशे भारतेषु न न्यायभिन्नता स्वीकृता तद्विदारणमत्र ।
स्वदेशे च विभाग प्रकटित ।

# ३०

यत् हत्याकाण्ड धर्मप्रेमणियेण १९४६ ख्रिस्ताब्दे समुद्भूतं तदुद्दिश्य—

बान्धवाः कलहाः कुत एते
रिपुचरिते महिते दुरिते

श्रुता स्मृता या चेतःशमना
रणे कारणं धर्मभावना
सा नु कथं त्वरते

अस्मत्कलहे परे शासकाः
व्याजयपस्या दक्षतक्षपराः
हसो मोदन्ते

विभावनार्थं दरिद्रतायाः
अलं ह्येतया दायादतया
आचरिते गदिते

भाविसंपदः प्रतिष्ठमानाः
भारतभूमौ रिरसमानाः
न पदं तु लभन्ते

अभियाम रिपु सहसा निखिलाः
देशबान्धवा ध्येयसकुलाः
रणभेरीनदिते

---

यागेसरीराम । रिरंसमाना रन्तु इच्छन्त्य ।

# ३१

शासनघटनाया उद्दिष्टानि प्रथमत स्वातन्त्र्यप्राप्तिपूर्वमेव नायकेन प्रकटितानि । तानि इमानि—(१३-१२-१९४६)—

सार्वभौमता प्रथिता
लोकशासने स्वतन्त्रता

भारतभूमेर्विविधविभागैः
एकशासनाहितानुरागैः
स्वार्थाकाङ्क्षासर्वविरागैः
प्रकटितैकात्मता

प्रणीयते शासनविधिजातं
प्रतीयते भारतलोकहितं
प्रलीयते कलहाना दुरितं
परिषदा संहिता

सत्तामूल भारतजनता
सत्ताशाखा प्रजा विस्तृता
सत्ताफलमपि लभता जनता
वयमतोऽत्र मिलिताः ६२०

अप्रगतानां पुरोयापनं
लघुसंस्थानां सर्वपालन
दीनदलितजनसौख्याधानं
कृत्वा कृतार्थता

समतान्यायः सर्वजनाना
नित्यरक्षण निजसीमाना
मनःशमं भुवि मनुजगणानां
कर्तुं वयमुद्यताः ६२७

---

दुर्गाराग । परिषद् घटनासमिति । पुरोयापन अग्रगति. ।

**Notes** सार्वभौमता=Soverignty, लोकशासन=Democracy शासनविधिजात=Laws of Constitution, परिषद्=(Constituent) Assembly, अप्रगत=Backward (classes), लघुसंख्य=Minority.

# ३२

१९४७ ख्रिस्ताब्दे जूनमासे एशियाराष्ट्रपरिषद् देहलीनगरे सम्मिलिता । तत्र 'एशियाभूमि इत स्वातन्त्र्यलाभमाया सर्वराष्ट्रै समाना, न हीना' इति नायकेन तदुद्घाटने उद्घोषितम्—

प्रतीची न भूमद्विषो प्राचीनदासी
प्राची न दासी ६३०

द्वित्रिवर्षशतानां
पुरुषावनिचरधर्षिता
दासता दुरन्तमाना
उत्सृज्य स उत्तिष्ठति एशियानिवासी

प्राचीना प्राचीय
विभाति संस्कृतिवलय
पश्चिमस्य साम्प्रतम्
जीवनमर्पयन् प्रकाशिता, नाशेः

क्रतिसमीरसहकार्ये
शमवह्निसंसार्ये
उन्नतिमार्गे निर्धार्ये
स्याद धरणी हिततरणी, जनोऽयं प्रवासी

वयमपि तं सहभागं
जगदुत्कर्षे सुभगं
रणहीनं परमनघं
संदधाम सुमनसैव, नवरविः प्रभासी

---

पहाडीराग. । पश्चिमावनिसयोगे विविधसपर्या एव प्रतीता न शान्तिमार्ग. ।
नवरवि. एशियास्वातन्त्र्यप्रद्योतक. प्रभासी प्रकाशवान् ।

# ३३

१४-८-१९४७ मध्यरात्रे भारता स्वायत्ता. । नायकश्च स्वतन्त्रभारताना प्रथम. प्रधानमन्त्री । तदा कर्तव्यभारस्य सम्यग्विज्ञान, उत्साहस्य च पराकाष्ठा प्रदर्शिते तेन–

घणघणघण्टा निशि निनादिता
स्वतन्त्रतोषा इयमुदिता
पारतन्त्र्यशृङ्खला छेदिता
स्वराज्यदेहलिराक्रान्ता

देवायासीद् दत्तं वचनं ६५०
समाधेयमधुना तद् गहनं
सम्पुज्य करौ सखे धृतिपरौ
भाग्यायास्तु नतिर्विहिता

जवेन सौदामिन्या विभवः
अभियातीत्थं नः सोऽभिनवः
सस्मितानन मूर्ध्ना नमनं
सभाजना स्यात् तस्य कृता

अधिरोहणपथसमाप्तिरेषा
तुङ्गे शृङ्गे स्थितिर्विशेषा
न तु विनिपातो न दृष्टिघातो
धन्या भव्या सज्जनता

सौख्यमरीचेः शान्त आतपे
दरिद्रताया दरी समीपे
नवे जीवने सहस्रोत्प्लवने
हृदयहितास्तु हि निर्भयता

भारतसुत, दासोऽयं बत ते
हिताय नित्यं सजत्रं यतते
मनोनिश्चिता तनोर्वाञ्छिता
भाग्यवन्दनेयं रचिता

---

केदाररागः । स्तौति भारतसुतं भारतजनताप्रतीकम् ।

# गीतानुक्रमः

पृष्ठे



Taking the oath
14-8-1947 midnight ( Song 33 )



Signing the Constitution (Song 43)



Homage to Mahatma
(Song 36)



With Sardar (Song 48)



With
President
Kennedy



Before the United Nations (Song 67)



To the nation after aggression 1962 (Song 70)

# ३४

१५-८-१९४७ प्रथमो दिवस. स्वतन्त्रभारतजीवने । शपथग्रहणे समापिते राष्ट्रस्य सदिष्ट–

रथाङ्गनेमिरियं नियतेः
उपरिदशामधुना लभते

दास्यशृङ्खला बलात् खण्डिता
भारतवसुधा मुकुटमण्डिता
मन्त्रघोषणे रताः पण्डिताः
धातापि रमयते

गङ्गा-कृष्णा-गोदा-यमुना.
त्वच्चरणाह्निकमतजीवनाः !
इय मङ्गले क्षणे वन्दना
विजये स्वतन्त्रते १०

अस्माभिरितः स्वशिरोधार्या
कार्यधुरा संमता न हार्या
जनतापीडा सकलोत्सार्या
मन्मन उत्सहते

वचनं सुजनाः! अद्य दीयते
सेवा भवतामङ्गीक्रियते
आमरणं व्रतमिदं तन्यते
हृद्ये मे चरिते

संपदासनो मङ्गलस्वनः
मोहवाहनो मार्गो गहनः
दीर्घश्वासो, मदीयं मनः
विभवे न तु रमते

ध्वज उच्चैर्नो नित्यमेजता
जनगणगीतं सदा गीयतां
राष्ट्रे निष्ठा हृदये ध्रियतां
भारतेषु जनते

---

बागेश्वरीरागः । एजता पवने दोलायताम् ।

## ३५

अकस्मात् दुर्दैवप्रहारेण दिवं गतो महात्मा । तत्र विलाप.-(३०-१-१९४८)

विभावरी दुरिता तिमिरिता
अस्तमितस्तेजस्वी सविता
व्यथिता विहृता वयं प्रमुषिताः

गुरुणाधिगतं चिरं जीवनं ३०
द्रक्ष्याम इतो न शान्तिसदनं
नाप्यत उपदेशामृतवचनं
विगतो राष्ट्रपिता

नास्तमितं ननु तरलं ज्योतिः
चिरप्रकाशा तस्य दीधिति.
कोटिकोटिजनहृदयप्रीतिः
स्वतन्त्रतानिरता

क्रोधवशैः पशुसममाचरणं
नास्माभिरिदं चिन्त्यं मरणं
शौर्यनिश्चयाऽऽभृतसंसरणं
अस्तु मतिः सुहिता

महासंकटे न सन्तु कलहाः
देशोन्नत्यां नित्यदुःसहाः
करोतु भूमेर्भूत्यै स्वाहा
सर्वस्वं जनता

मया जीवनं व्रत समर्पितं
स्वर्गतगुरुशपथेन निश्चितं
राष्ट्रविभवसवर्धननिहितं
धृतिरतोऽनवरता

[illegible] । [illegible] एव [illegible] ।

# ३६

महात्मने श्रद्धाञ्जलि ।

स्तोत्रे न समर्था
महात्मताये श्रद्धा व्यर्था

सरस्वतीय प्रयतते वृथा
न शब्दकोशा अर्थवाहका.
गर्जन्त स्तनितैर्वलाहका.
तैर्न गीयते विद्युल्लेखा
विरचिता तु गाथा

अस्तमिता भुवनैकसत्वया !
क्व खलु स्यादस्तगमन
म्लाने कमले ननु न विलयन
परिणमते नच परिमलह्रान
कीर्तिरम्लानाया

विफलप्रस्था स्मारकसंस्था
हृदये हृदये यस्य निवसनं
दिवसे दिवसे यस्य चिन्तनं
पदे पदे यदि तत्स्मृतिचिह्नं
कुतः स्यादनास्था

कण्टकास्तृतो न इतः पन्था
तथापि न प्रभवेद् दुरिततमः
रवेर्मज्जने संध्यानियमः
नापि संभवेद् दिशां संभ्रमः
दीप्तिरियमवितथा

न वलरतूपाः संप्रति सार्थाः !
चरित्वा त्वहिंसासोपानं
स्मृतिचैत्ये नो विहारवसनं
जनकल्याणं स्यान्निर्वाणं
जीविकास्तु सार्था

---

कलिंगडारागः ।

# ३७

स्वातन्त्र्यस्य प्रथमे वर्धापनदिने नायकोक्तिः ।

स्वतन्त्रभारतवीराः
जाग्रत, उत्तिष्ठत, सनह्यत
प्रतीक्षते वः कार्यधुरा

स्वराज्यलाभे नैव समाप्तिः
कार्यवनानां विपुला व्याप्तिः
निकषे निहिता भवतां दीप्तिः
रणरङ्गणशूराः

शान्तिसंगरः परं विभिन्नः
अपवृत्युपकारो ह्यापन्नः
अविधेयो देशः सपन्नः
रुचिरवचनवीराः !

नेताऽस्माकं ब्रह्मविलीनः
अधुनोत्कर्षो ननु नोऽधीनः
तिष्ठतु कोऽपि न वृत्त्या दीनः
भवाम भो धीराः

नासौ समयो विसंवादिनां
पृथक् सृतानां प्रतिनादानां
मिथः सहायाः स्याम, कामनां
विन्दाम हि सहचराः

जनसेवायां विभूतिसमरे
नरो नरो वीरोऽस्तु प्रखरे
विस्मयाकुला निवसन्तु परे
लसन्तु विजयस्वराः

---

[illegible]. ।

# ३८

सयुक्तराष्ट्रकुलसभाया ( United Nations Assembly ) यद् भाषित -११-१९४८) प्रथमोपस्थितौ तदिद–

समुदितो निर्मम सगम
सर्वेभ्यो विनतस्य मे नम

नानादेशाना प्रशासिन !
युतराष्ट्रमहासभावेशिन
मनुजश्रय सविवर्धिन
सतोष परम
सर्वेभ्यो विनतस्य मे नम·

ध्येयमुदार ध्रुव लक्ष्यित
यतामहे तत्कृतेऽनवरत
साधन तु यदि शुचि न रक्षित
भुवि राजेन तम·
सर्वेभ्यो विनतस्य मे नम

समरे हिंसा दुःख द्वेषः
रणपरिणामे न कस्य तोषः
पुनर्योधनं चिरसंघर्षः
अयमाहवनियमः
सर्वेभ्यो विनतस्य मे नमः

जनस्य नान्नं नापि च वसनं
न सुखस्पृष्टं तस्य जीवनं
कस्मादत्र तु नीतेः पठनं
न तेन दुःखशमः
सर्वेभ्यो विनतस्य मे नमः

अखिलां पृथिवीं ग्रसते भीतिः
भवतु निरासे सभायाः कृतिः
जीवतु सुमना मानवजातिः
सकल एष धर्मः
सर्वेभ्यो विनतस्य मे नमः

वचने मर्यादातिक्रमणं
यदि चेत् स्यात् तस्य तु विस्मरणं
सर्वसमतया नाश्यतां रणं
शब्दानां विरमः
सर्वेभ्यो विनतस्य मे नमः

---

दरबारीकानडारागः । निर्मम. स्वार्थरहित. । प्रशासिनः सबोधनम् । संयुक्तराष्ट्रसभाध्येय युद्धपरिहार. । सकलो धर्मो मानवभीतिनिरसन एव भवतु । सर्वसमता वर्णादिवर्णादिभेदरहितता । सर्वजगद्धुरीणान् उद्दिश्य इद वचन, अत. नम्रतासूचकम् । सर्वेभ्यो विनतस्य मे नमः इत्यस्य पुनरुक्तिरत एव ।

# ३९

भारतमानचित्र वीक्ष्य—(५ १२ १९४८)—

विलोक्यतां भारतचित्रं

शक्तिमतीयं हिमनगमाला
त्रिसागरीयं सभृतसलिला
तथापि जनता निर्धनाऽबला
कथमिदं विचित्रं

या काचिच्छक्तिर्विनियुक्ता
संहारे सा जनरुधिराक्ता
विभववर्धने न सोपयुक्ता
क्रियदिदं चरित्रं

भूतकालभर इयानसह्यः
भविष्यदुत्कर्षः सग्राह्यः
वर्तमानसमयोऽनिवार्य्यः
भवतात् नो मित्रं

न स्यादधुना कुतः प्रमादः
विज्ञानभृतोऽस्तु संप्रसादः
रचनीयो भूतेः प्रासादः
चरताच्च खनित्र

भवतु दुस्तरो महासागरः
वहतु प्रसभ प्रभञ्जनभरः
परित्यजतु मा कदासौ करः
सवृतं वहित्र

देसकाररागः । हिमाद्रि सिन्धवश्च कार्यशक्तिसपन्ना । न सा शक्तिर्भूतकाले देशकार्ये योजिता । अधुना तु विज्ञानमहायतया तत्करणीयमेव इति भाव ।

Notes : शक्ति = ( Industrial ) power.

## ४०

अस्मिन् देशे कार्यनिरगमि तथापि कार्यरते बहुश अभाव एव कार्य-कर्तृषु दृश्यते इत्युच्यते—(२८-१-१९४९)

कार्यरतिविरला
सचरति मति स्वैर तरला

देशे विचरति विपुल दैन्य
धृतिस्तिम्भन कुतोऽभिमान्य
कार्यकारिणा सकल सैन्य
जनपीडावारणेन धन्य
नीतिरिय सरला

को नु प्रश्नः कार्यच्युतितः
मनुजजीवने भवति निरस्तः
प्रश्नाज्ञाने प्रतिवच॰ कुतः
सम्यगधीते विलीयतेऽन्तः
समस्याऽपि जटिला

मृतो न कश्चित् कृतिबहुलतया
निधनमपि वर राष्ट्रसेवया
नश्यन्ति जनाः सदालसतया
न मुक्तिलाभो निष्कर्मतया
नियतिगतिः कुटिला

साध्यं जनतासुखदजीवन १७०
राध्य भूत्यै नवविज्ञान
बाध्य विषमं धनविभाजन
रोध्य हिंसात्मक साधन
सन्तु जनाः सबलाः

इतिहासे यदि सुवर्णाक्षर
लेख्यमथ तदा जीवनसमर
विहाय यान नैव रुचिर
युद्ध मानय जीवनाध्वर
विजयश्रीः सफला

---

भैरवराग । सर्वेषा तरला मनिर्वाग्विहारे रमते न तु कृतौ । कृतिस्तम्भन कार्यविरति । न तथा प्रश्ननिर्णय । अधीते सति । मानवेन कष्टकृति कार्या इति कुटिला नियतिगति । राध्य उपयोज्य आराध्य इति यावत् । युद्ध कार्यविजये, न शस्त्रै रणाङ्गणे । सैव विजयश्री सफला न रणलब्धा ।

## ४१

स्वातन्त्र्यस्य द्वितीये वर्षापनदिने—(१५-८-१९४९)-

नार्वसितं राष्ट्रकार्यं
यान्तु जना आयान्त्वविचार्यं
राष्ट्रजीवन सततमूर्ध्य

समरेऽस्माकं यो निर्धारः-
मत्योत्साहः श्रद्धाधारः
यो विश्वासोऽभूदनिवारः
तैरधुना समवतार्यं

भूमिर्महतीयं हि विस्तरे
रचितमद्भुत भूतदुस्तरे
करवाम पुनः किमपि गोचरे
सर्वजनैर्विनिर्धार्यं

राष्ट्रपिता नेता यदि विगतः
कार्यंधुरा वोढव्या हि ततः
समरे देहानर्पितवन्तः
नैदं स्यात् स्मारणीयं

स्वावलम्बने निश्चितोन्नतिः
मैत्रे नास्तु च याचकवृत्तिः
स्वतन्त्रतायाः सबलैर्गुप्तिः
मनसीद सदा कार्यं

स्वराज्ये तु कर्तव्यदक्षता
स्वयमनुसार्या नित्या वितता
यदि सभूतिर्दृढं विरचिता
दूरमितो न हि ध्येयं

---

रागेश्रीरागः ।

# ४२

यन्महात्मना स्वराज्ये उद्दिष्ट घोषितमासीत् तत्साधने सर्वे वय सैनिका यथाशक्ति कर्तुमर्हाम । (३१-१-१९४९)

नयनान् नयनादश्रुधारा
ह्यार्या भुवने गुरोरुदारा
मतिरासीज्जीवने सादरा
शक्तिरितो मयि कुतो ह्यपारा

तथापि किंचित् कर्तुं यतते
अय जनो निजगुरुमनुकुरुते
क्लेशात् पीडा जगति न सहते
सर्वास्तु कृतिः शान्तधीरा २१०

नवखण्डैरपि भूरखण्डिता
दुरितभरेऽपि तु विसवादिता
इतिहास घटयितु सगता
रणवाणी सदघति वीरा

न चैशियागतिरुक्ता नीचैः
नान्येषां मतिरुदिता वोच्चैः
द्वेषालिप्तैश्चित्तैर्विकचैः
मानवसेवा स्यान्निर्भरा

गतकालभरं त्यजाम सर्वे
आशां वृणुमो भविष्यति नवे
दिष्ट्या यत्नं ध्येये विभवे
साधनशुचिता विहिता स्थिरा

नैकस्येदं विशालकार्यं
सौहार्देन हि तत् स्वीकार्यं
परंपराजनितं जनधार्यं
सर्वसैनिका नियतेः कराः

---

माडराग । चतुर्थचरणे मात्रोनत्वं पठनवैचित्र्यार्थं ।

Notes : Mahatma had announced that he would like to wipe the tears from every eye.

# ४३

२६-१ १९५० दिनाङ्के सार्वभौम प्रजासत्ताक भारतराष्ट्रं घोषितम्। सेयं घोषणा-

प्रजासत्ता प्रतिज्ञाता प्रयत्नैरद्य सा प्राप्ता
जनाना धर्मवर्णाना समाना मान्यता दीप्ता

विकासे भारतीयाना
निरासे व्यर्थवादाना २३०
लप्स्यते साधन सर्वदक्षता स्यादिय विहिता

जनाः सर्वे नयागारे
समाना रक्षणाधारे
कुतोऽप्यन्यायशङ्का स्यात् समूला सत्वरोत्खाता

सर्वभाषाभिवृध्यर्थं
प्रयत्येताखिलैः सार्थं
कथां ग्राख्यायिकाः श्रेष्ठा विरच्यन्तां भुवि ख्याताः

नरैर्नार्योऽपि पर्याप्ताः
इतो मान्या हि नायत्ताः
इयत्ता भागधेयानां समन्वेष्टु विनिर्मुक्ताः

इमे वेदा श्रमी देवाः
*इमा विद्या इयं सेवा*
इमाः सीमा ग्रनुत्क्राम्या इमे प्राणाः स्वराज्यस्थाः

---

कामोदराग । सप्तमात्रक ताल । घटनावैशिष्ट्यानि तयोद्दिष्टानि च व्याहृतानि । इय घटना एव वेदादिसर्वप्रमाणा ।

# ४४

परराष्ट्रसबधे यानि तत्वानि प्रथमत एव दृढीकृतानि नायकेन तानि एव पुन प्रोक्तानि । १७-३-१९५० दिने ।

परदेशैर्मित्रता
भारतनीतौ प्रथम विहिता

दास्यमोचन प्राचीनानां
न समता सत्ताऽन्यजनाना
स्वायत्तत्वे यतमानानां
निरन्तरा नो भ्रातृता

वर्णधर्मभेदेन मानवाः
उच्चनीचता सर्वबान्धवाः
न भजेरन् न सहेरन्नथवा
विचारसरणी निश्चिता

अपक्षस्थितिः सततमभिमता
बलवृन्दैर्नो न संबन्धिता
धीस्वातन्त्र्ये चैकनिष्ठता
वृत्ता भाषिता स्थापिता

मध्यस्थत्वं विवादोद्भवे
समस्यानिरासो न चाहवे
सवदनं मतभेदसंभवे
विभूतिरीतिर्मानिता

मानस्थानं शासननीतौ
एशियासुताना भवेत् क्षितौ
सुखिनः सर्वे सन्तु सगतौ
नेच्छन्त्यन्यद् भारताः

---

शकराराग. । स्वयनिर्णय, समानता, सर्वपक्षालिप्तता, युद्धरहितता, एशिया-महत्त्व च एतानि तत्त्वानि प्रथममेव वृत्तानि । नाद्यापि पञ्चशील जनितमासीत् ।

# ४५

संस्कृतिव्याख्यान ६-४-१६५० दिने ।

केयं दीक्षा काऽस्या व्याख्या या राष्ट्रे संस्कृतिः
वर्ण्यते का तस्या आकृतिः

हिमालये वा सिन्धुतले वा भवति तदीया स्थितिः
वर्तते नरे नरे का मितिः
युगे युगे सा किमेकरूपा परिवर्तवा गतिः
कथं वा ज्ञेया तत्सगतिः

ननु धर्माचारे तस्यास्तत्त्व हितं
तद् धर्मेण रणं कथं भवति परिणत
ननु समाजसंघर्ष एव वा तत्कृत

अनुभूतौ वा विज्ञाने वा सङ्कलितैषा श्रुतिः
प्रणीता येन च मुनिना स्मृतिः

क्षुधापीडिता सदनविरहिता भवति जनानां ततिः
संस्कृतेरेषा नु फलश्रुतिः
धैर्यधरा वा भीतिपरा वा संस्कृतिशूरा क्षितिः
भवेत्तत् जानीयात् सन्मतिः

या द्वेषं शाम्यति भुवनेऽस्मिन् निजबलैः
या भीतिः स्पृशति न कुतर्कितैश्चञ्चलैः
या मता प्रसादोऽर्जितो हि सुजनैः खलैः

सैव शक्तिर्भवेत्संस्कृतिः सदैव तस्याश्रितिः
तयैव हि जनजीवननिश्चितिः

---

जगलाराग । द्वेषभीतिरहिता शक्ति संस्कृति ।

## ४६

नवसंशोधने खलु विज्ञानस्य पुरोगतिः। तस्या उपयोजनेन च अस्माकं प्रगतिः। अतः पुराणनूतनयोः समन्वयः साध्य इति सूच्यते। (२२-४-१९५०)

विज्ञानकृता सा पुरोगतिः
सर्वदा प्रणेया नवविवृतिः

रूढिप्रियता समाजरीतिः
रूढिभञ्जनं विज्ञानगतिः
कथं साध्यते द्वयोः संगतिः
सपर्येऽस्मिन् निहिता प्रगतिः २९०

भयदापत्तिर्यद्यापतिता
तदैव विज्ञानस्य जागृता
दीप्तिर्नाशे भवति नियुक्ता
कष्टैषा यत मानवनियतिः

विज्ञानभृतं कार्यं सुकरं
तेन हि भूतिर्याति विस्तरं
विदिता रीतिस्त्वेति सत्वरं
कम्पते प्रसुप्ता मनःस्थितिः

साधु न सर्वं भवति पुराणं
नवमपि नूनं रुचिरं निपुणं
करोतु यत्नैर्ग्रहणाग्रहणं
पूर्णतां प्रस्थिता नरजातिः

प्रगतिपथे ननु नवानुभूतिः
गमयति या तमसो नो ज्योतिः
कण्टकिते स्याद् दृष्टिजागृतिः
निमीलिते ननु नयने विहृतिः

भयावहं न तु नवविज्ञानं
तत्स्वीकरणं भवतु नन्दन
अज्ञानलये कुतः शोचनं
स्वागते हि मुदिता रता मतिः

---

शंकराभरणराग. । विज्ञानस्य विशेषप्रगति. युद्धादिभयावहापदि एव भवति इति मनुजदैवदुर्विलास. । विदिता रीति. नित्याचरिता रूढि. । विज्ञान-ज्योतिरपि दृष्टियोजकस्य एव पथि कण्टकान् दर्शयेत् ।

# ४७

आरोग्यसंवर्धनेऽपि नवीननिदानपद्धतिं नवभेषजोपयुक्तिश्च अवश्यं इति प्रतिपाद्यते । (३१-८-१९५०)

ओषधीनां निधिः
आरोग्यानां प्रतिनिधिः
भारतचन्द्रः क्षेमप्रणिधिः

चरकसुश्रुतादिभिरारब्धं
तस्य फलं वरमधुना लब्धं
निर्झरमूलो ननु विस्रब्धं
संहितोऽम्भोनिधिः

विज्ञानं पाश्चात्यैर्युक्तं
भेषजजातं नवं निर्मितं ३२०
आयुर्वेदे यदि तदाहृतं
मणिकाञ्चनसन्धिः

वायुपित्तकफनिदानप्रथा
न समता स्यादितः सर्वथा
कुतोऽभिमानः सभवेद् वृथा
शममेतु व्याधिः

विनाप्यधीतिं केचन भिषजः
तैश्च दूयते सर्वसमाजः
दण्डनैरसौ नृशंसशठजः
वार्यतामुपाधिः

आरोग्ययुते परमनाविले
निरामयेऽस्य क्रीडालीले
सुखदजीवने संसृतिसलिले
प्राप्यता समाधिः

जौनपुरीराग ।

४८

१५-१२-१९५० दिने चिरमहत्कारी 'श्री वल्लभभाई पटेल' दिवं गत ।
तमुद्दिश्य–

विगतो विनेता प्रणेता
अयि भारताना महितो हि नेता

सहचर आसीत् समरे दीर्घं
कृतमनेन सारथ्यमनर्घ्यं
स्नेहजातमथ भवति तु मोघं
दीपिकोपशान्ता ३४०

आसीद्वयसा गुरुर्मदीयः
परिवृतवान् मा सदा स्वकीयः
छिन्नितोऽद्य मे करो द्वितीयः
चपलेव पतिता

श्रुतमध्ययनं द्वाभ्यां प्रवरं
गुरुचरणसमीपं निरन्तरं
स्वतन्त्रतादक्षिणा निर्भरं
गुरवे निवेदिता

प्रवलितैकला स्वतन्त्रतायाः
अद्वैतं प्रथितं जनतायाः
वज्रमुष्टिहननं हिंसायाः
रीतिरियं चरिता

पुष्पाञ्जलिमिह समर्पयेयं
शिलालेखसमजीवनकार्यं
कणे कणे भूमिर्दिशतीयं
भागधेयधाता

मालगुञ्जीराग । पुष्पाञ्जलिमिति । पुष्पाञ्जलिं समर्पयेय तस्य स्मृत्यै । इय भूमि. कणे कणे तस्य जीवनकार्यं दिशति । भागधेयस्य धाता विगत. इति ध्रन्वयः ।

## ४९

बालकान् प्रति । (२६-१२-१९५०)

जगति बालकाः सञ्चरत
विश्वसुन्दरी लोकयत
वने वृक्षराजिवितता
गिरयः शृङ्गोन्नताः स्थिताः

विविधरूपगुणवर्णानि
स्मयन्ते कथ कुसुमानि
विहगमा विटपान्तरिताः
रवन्ति मधुर हर्षभृताः

ऋतुचक्रे सृष्टिदेवता
नानावेषैः परिनर्तिता
शरदि शाद्वल नववसनं
हरितं मोदयते नयन

नवपल्लवकं तामरसं
वासन्तिकमस्ति च सरसं
वर्षाकाले निर्झरिणी
क्रीडन्ती गिरिभुवि तरुणी

भीतिं चित्ते मा कुरुत
वने पुनर्नयनं तनुत
कौतूहलजिज्ञासे ते
भवता बालाः समाहिते

बालोऽय क्रीडालोलः
परन्तु देश प्रतिबाल
समागते यौवने ततः
पत्न्याः सेवाया भ्रान्तः

---

आनन्दभैरवीराग ।

## ५०

विंशतितम शतक अर्धसूनम् । (३१-१२-१९५०)

अर्धशतक सृतं समाना
लुप्त कालोदरे मन्थक

युद्धमण्डित युद्धदूषित
शान्तेर्मृगजलमत्र न पीत
तृष्णाकाऽऽक्षुधापरीत
आशाभञ्जक

राष्ट्रे भुवने सघर्षक्या
मध्य नियार्ण येनचन यथा
गुप्तदकामनापोपणा वृथा
नैतत् साधक

दृढनिश्चयवल्लमन्तःकरणे
दुर्दम्याशा जगत्कारणे
विश्वासो भाग्यसूर्यकिरणे
पथि तद् रोचकं

शान्तिपथे नच मानदूषण
क्षमा भवति वीरस्य भूषण
क्रोधद्वेषादिपुरःसरण
कार्ये घातकं

देशरक्षणे भवत्सेवकः
सहायताया अयं ग्राहकः ४००
प्रार्थयते बलमेवमेककः
भवतां तारकं

---

जयजयवन्तीराग । समाना संवत्सराणा ।

## ५१

युद्धवर्जन दीनजनतासंगोपन राष्ट्रधुरीणानां अग्रिम कर्तव्यम् । युतराष्ट्र-सभाया (U. N. Assembly) प्रतिपादित एतत्– (१२-१-१९५१)–

शान्तिरक्षणे संस्कृतिरक्षा
परिहार्येतः समरदीक्षा
याच्यते मयैषा खलु भिक्षा

शूरैर्हि शमो मनसि निधेयः
शस्त्राघातः सदैव हेयः
क्रोधः क्षान्तेर्बलैर्विजेयः
बलिनामेषा सत्त्वपरीक्षा

मृत्युशासने जगद्बान्धवाः ४१०
भीतिपरीता वीरपुङ्गवाः
नाशहेतवो मरुदधिकजवाः
निरन्तरं तासां प्रतिवीक्षा

एशियावनिर्यतो जागृता
मानवसंख्या तत्र याऽमिता
मा भूच्चरितार्थस्य दीनता
तस्याः केवलमेपापेक्षा

करः सदा सौहार्दे सज्जः
भवतु केऽपि ननु संकटभाजः
श्रीमास्तिष्ठतु तत्र सलज्जः
करोतु नैव तु मैत्र उपेक्षा

एका ज्वाला वह्निनिःसृता
दग्धु विश्वं सर्वसमर्था
जलनिधयो न शमे पर्याप्ताः
अद्यतोऽप्यतो भवतु हि शिक्षा
युद्धवर्जिता प्रश्नसमीक्षा

---

धानीराग ।

## ५२

युद्धे न कस्यचन कल्याणं । वर्जनीय एव स मार्गः (११-८-१९५१)

समरेऽधिगतं नैव कल्याणं
हानं ध्वसनं प्राणमोषणं
मिथो रोपणं द्वेषपोषणं
नैव कल्याणं नैव कल्याणं

संपद् राष्ट्रे श्रमैरर्जिता
श्रमिषु स्यात् सा समं विभक्ता
रणैरन्यथा यदि विनाशिता
नेदमुद्धरणं नैव कल्याणं

जयेन वा नन्वपजयेन वा
विनाशरीतिः समरे सर्वा
विपद् विजयिनो भवत्यपूर्वा
नास्त्यनस्त्राणं नैव कल्याणं

महाप्रयत्नै : प्रकल्पबन्धाः
रचनीया वा यन्त्र–कबन्धाः
अन्ननिर्मितौ कृताः प्रबन्धाः
तेषां हि हरणं नैव कल्याणं

विध्वंसकशस्त्रैर्विनाश्यते
क्षणेन, यन्नर आयुषि कुरुते
अतो न युद्धे बुद्धी रमते
नो मनोरमणं नैव कल्याणं

युद्धेनार्जनरीतिरुज्झिता
अस्माभिर्ननु चिरं वर्जिता
शान्तिमार्गपरगतिः समुचिता
किं नानुसरणं तत्र कल्याणं

सारंगराग. ।

# ५३

समाजकल्याणप्रकल्पा ग्रामे ग्रामे प्रारब्धा. । (७-५-१९५२)

क्रान्तिनिनादो ग्रामजीवने प्रसरतु मारुतगतिः
इयं सा स्वतन्त्रतासंगतिः

अज्ञानं विपदुदयं रक्षः
वक्षोभङ्गे तस्य तु दक्षः
रामशरो विज्ञानप्रकरोऽनेन भवेत् प्रगतिः

शस्यसमृद्धा भूमिः प्रथिता
कथं तु जनता क्षुधापीडिता
रामफलं विज्ञानलाङ्गलं तेन संभवेद् भृतिः

अनामये गङ्गायाः सलिलं
नालमिदानी स्वय केवलं ४६०
रामधन विज्ञाननिदान तेन हि नः सुस्थितिः

जनतोत्कर्षनियोजनभव्या
ग्रामे ग्रामे समाजसेवा
रामजनो विज्ञानमण्डनो यातु पुरः संप्रति

वर्षसहस्रपुरोगतिहीना
समाजोन्नति प्रणीयमाना
रामनाम विज्ञानसामत सफला सधास्यति

---

विलावलराग । विज्ञानेनैव प्रगति इति भाव । रामशर रामबाणवत् अमोघ । फल लाङ्गलफल कृपिपरिणतिर्वा । रामफल अभिराम फल यस्य । विज्ञानकृतनिदान मनोरमधन । केचित् हरिजना सर्वे एव तु रामजना भारतीया । विज्ञानमाम्ना गीत रामनाममुक्त सफलता वितरेत् ।

## ५४

श्रमैरेव स्वातन्त्र्यसाफल्यम् (१-११-१९५२)

संपन्नाधिगता क्रान्त्या
वना श्रमं भून्या क्रन्दन्त्या

स्वराज्यलाभे सर्वसमस्याः
स्थिताः पुरो नो विजृम्भितास्याः
न वादजातैस्तास्तु निरस्याः
कार्यभरैर्भृश्याः

निर्मित्या संपदां समृद्धिः
समविभाजने तासा वृद्धिः
तत्र धीमतां सकला बुद्धिः
विरमत मा श्रान्त्या

किं न्यूनत्वं श्रमकार्याणां
विना श्रमेणैव भवो नराणां
स्वेदजले बलमपीश्वराणां
अधुनालं क्षान्त्या

शासनकर्मचराणां सेवा
कुशलतया विहिता स्यादथवा
नार्हन्त्येतेऽलसस्वभावाः
देवपद दैत्याः

अनशना हि संचरन्ति शिशवः
तेषामविता को नु केशवः
दरिद्रतानाशार्थमाहवः
अपेत्वियं कृत्या

तिलक्कामोदराग । भृत्या पूरणीयाः ।

# ५५

पुराण-नवीनयो समन्वय अवश्य ।

शकटो वृषभान्वितः पुराण
भूमा अस्या हि वाहन
तैलेन्धनवत् तथा प्रवहण
गगने यान हि विमान

अधिभौतिके सुधारणाया
विविधाङ्गाना प्रसादन
नवा यन्त्रणा नव साधन
अपसारयति प्राचीन

परमाणुयुगे जीवनधारा
सूक्ष्मा गहना वहतीय
मानवचरिताकाङ्क्षितजाते
क्षितिजेऽभिनवे धृतिवनय

किं न्यूनत्व श्रमकार्याणां
विना श्रमैनंच भवो नराणां
स्वेदजले बलमपीश्वराणां
अघुनालं क्षान्त्या

शासनकर्मचराणां सेवा
कुशलतया विहिता स्यादथवा
नार्हन्त्येतेऽलसस्वभावाः
देवपद दैत्याः

अनशना हि सचरन्ति शिशवः
तेपामविता को नु केशवः
दरिद्रतानाशार्थमाहवः
अपेत्वियं कृत्या

---

तिलककामोदराग । भृत्या पूरणीया. ।

# ५६

नवे युगे नूतनानि श्रद्धास्थानानि । विज्ञानयुगे विज्ञानचमत्कृतानि जनहितस्थानानि श्रद्धामन्दिराणि । (८-७-१९५४)

श्रध्दास्थान नमनभाजन विवर्तनीय प्रतिदेव
नवे युगे मन्दिर नव

कैलाससर शतद्रुनीर नङ्गलबन्धे सकलित
राष्ट्रजीवने प्रवाहित

महाप्रकल्प चिरसकल्प सहर्षचित्त विलावये
मोदे विज्ञानज–विजये

स्वप्नचिन्तन सत्यदर्शन जात जनहितवृद्धिकर ५२०
तृषितधरा लभते नीर

धर्मायतन देवायतन वर्तमानकालीनमिद
लोकवृन्दकल्याणपिद

कुटीरोद्यमाः शकटसमाना
ग्रामे ग्रामे वर्धन्तां
अण्वग्निगृहं विमानकल्पं
शक्तिं जनयत्वपरिमितां

कर्मचारिणा नवानुभूतिः
देशकार्यनिरता भविता
नवसपत्-समविभक्तिगीता
प्रसरतु सा जीवनकविता

विज्ञानभृता नवा योजना
तथा कल्पना प्राचीना
समन्वये स्यात् सर्वोदितता
संसारेऽत्र समीचीना

---

मिश्रकाफीराग । सर्वोदितता सर्वोदयवत्ता ।

## ५७

परराष्ट्रनीतौ विख्यातमिद पञ्चशील (१७-६-१९५५)।

विहितमिद पञ्चशील
उदित सलिले नवकमल

परस्पर सीमाः सदाऽऽहताः
निजप्रदेशे सार्वभौमता
मान्यमादिम नीतिदल

मिथोऽभियान नाङ्गीक्रियते
रणावलम्बो न समन्यते
भतं द्वितीय चरितवल

समरकम्पिते दु.खविभक्ते राष्ट्रे पुनरुत्थानमिदं
पश्यत रचितं महाह्लदं

नवं जीवनं श्रमैःपावनं जना लभन्ता शान्तिपरं
विन्दन्तु वल कार्यंकरं

निजकर्तृत्वे धीश्रेष्ठत्वे विश्वासेन हि महत्तरं
लभामहे प्रोत्साहभर

श्रमसाफल्य हृतवैकल्यं स्फुरणं कार्ये पुनर्नवे
नयनमाहित नवविभवे

श्रध्दास्थानं नमनभाजन विवर्तते कालक्रमतः
नयमोऽयं प्राज्ञानुमतः

---

वल्याएराग । कैलासपरिसरात् नि सरनि इति कैलाससर ।

## ५८

### युवकान् प्रति (२३-१०-१९५५)

कि वचनैरिह ? कृतिः समर्था
केवलशब्दा गदिता व्यर्थाः

युवकाः ! प्रवसत पृथिवीगोले
पश्यत भुवनं संगतमूले
भवतां नयने दक्षविलोले
मधुरेयं गाथा

न कोऽपि पूर्णो न वाऽपि मुक्तः
सर्वः स्वार्थे प्रमादभक्तः
जगतीरङ्गे यो हि विरक्तः
नेयं तस्य कथा

अन्तर्गतशासने न कार्यः ।
हस्तन्यासो नित्यनिवार्यः
वृतं तृतीयं दलममलं

मान्या सर्वेषामपि समता
अस्तु मिथो लाभे मती रता
चतुर्थमेतद् बन्धबलं

सर्वेऽपि समं जीवाम शर्म
न स्यादेवं कुतोऽपि विषम
पञ्चमं मतं वरशीलं

राष्ट्रधुरीणैराचरणीयं
नीतिपथे शीलमिदं सदयं
शान्तिरवतरेत् क्षितावल

---

अहीरभैरवराग. ।

## ५८

युवकान् प्रति (२३-१०-१९५५)

किं वचनैरिह ? कृतिः समर्था
केवलशब्दा गदिता व्यर्थाः

युवकाः ! प्रवसत पृथिवीगोले
पश्यत भुवनं संगतमूले
भवता नयने दक्षविलोले
मधुरेयं गाथा

न कोऽपि पूर्णो न वाऽपि मुक्तः
सर्वः स्वार्थे प्रसादभक्तः
जगतीरङ्गे यो हि विरक्तः
नेयं तस्य कथा

स्वदेश एव श्रेष्ठा वसुधा
मन्यन्तां सर्वे स्नेहान्धाः
तत्त्वं जानन्त्येव ते बुधाः
अभिमानो हि वृथा

भारतीयजनता प्रतीक्षते
भव्यदिव्यतप उत्कर्षकृते
कृतज्ञतायां सुकृती रमते
माऽऽकाङ्क्षा व्यर्था

चमत्कृतिर्न च भूतिसाधनं
तरुणैः कार्यं श्रमस्वेदनं
कुरुते नित्यमनुग्रहदानं
तेन यशःश्रीः पथा

---

जोगकंसरागः ।

## ५९

राजनीतेश्चतु सूत्री स्वयमभिप्रेता निर्दिश्यते (२-१६५६)।

चरितचतुःसूत्री विधात्री
यया मण्डिता स्वय धरित्री

समाजवादो लोकशासने
संपद्‌द्रुम. सति नियोजने
समतादृष्टिस्तद्विभाजने ५८०
मन्त्रो गायत्री

न धर्ममानं भवेच्छासने
विविधा पूजा सदने सदने
समता सर्वस्मिन् सभाजने
षड्जवती तन्त्री

उच्छ्रितं भवेज्जीवनमानं
जाजनानां विपुलं ह्यन्नं
एवं क्रान्तिं विना हि हवनं
अयं जनः सत्री

व्यक्तिगौरवं प्रतिसंधेयं
व्यक्तिविकासो नित्यं ध्येयं
जीवनं भवेत् सर्वनिर्भयं
गगने नु पतत्री

भारतेवृंता शासनसंस्था
सूत्रचतुष्टयविनिहितनिष्ठा
सेवामङ्गलसङ्गप्रस्था
जनवत्सलधात्री

---

दुर्गाराग । नियोजनार्जितसंपत्समविभाजन सर्वधर्मसमतादर्शनं
उच्छ्रितं जीवनमान निर्भय व्यक्तिविकसन चेति चतुरङ्गरीतिः शासनध्येयभूता ।

## ६०

लोकमान्यतिलकस्मृतिवन्दन । (२८-७-१९५६)

नमामि लोकमान्यता
क्षणे क्षणे पुनः स्मृता

स्वराज्ययुद्धदीपिता
युवकहृदयपूजिता

प्रबलबुद्धिसागरा
भगवदुक्तिविस्तरा

ध्रुवनिवासमण्डना
मृगयुगप्रवाचना

तुङ्गदुःखपर्वता
येन लीलया वृताः

भीतिरन्तरे व्यथा
प्रवेशिता न सर्वथा

समरवीरनायकः
पुरोगतिः सदैककः

लोकजागृते रविः
अनयहननखरपविः

क्रान्तिशृङ्गनादनः
भ्रान्तिभङ्गसाधनः

श्रान्तिसङ्गमादनः
शान्तिरङ्गराधनः

‘नमामि धैर्यसहिता
नमामि कार्यमग्नता

त्रिदशवह्निजागृता
नमामि लोकमान्यता

---

मिश्रकेदारराग ।

Notes भगवदुक्ति० ( l. 603 ) Ret गीतारहस्य by Tilak.
भुवनिवास० ( l 604 ) Ret Arctic home in the Vedas by Tilak.
मृगयुग० ( l 605 ) Ret Orion by Tilak.

## ६१

संस्कृतभाषाया महत्ता नायकेन प्रस्तुता (१-८-१९५६)।

संस्कृतभाषा महिता भारतेषु चिरकालं
विश्ववन्दिताऽधीता रक्षितोन्नमितभालं

कालमुखे लोपमिताः
सम्राजो ह्यभिषिक्ताः
मन्तरिता नृपसत्ता
महाभारतं तथापि राष्ट्रजीवनाय बलं

राजनीतिचरितकथा
द्वेषकपटरणव्यथा
क्षणिकतावृता तथा ६३०
गीर्वाणं वाङ्मयं तु जनरञ्जनचिरविमलं

भारतेतिहासपटे
वीरपुरुषचरितपुटे
जीवनसरितश्च तटे
संस्कृतवाणीद्रविणं मारुतेऽपि शान्तजलं

विविधा जनताचाराः
रसनागदितोच्चाराः
तुङ्गमनोज्ञविचाराः
देवशारदाधृता हि, तद्भृतं फलं विपलं

भूतभविष्यत्सन्धि
ज्ञानामृतमहोदधि
जीवनहितशान्तिनिधि
वाणीय श्रवणीय सबिभर्ति ननु विपुल

---

खवावतीराग. ।

## ६२

समन्वयो भारतजीवनवैशिष्ट्य इति निरूप्यते। स भूतवर्तमानभवि-ष्याणा विधेय इति विज्ञाप्यते। (१८-१२-१९५६)

जीवनरीतिः
भारतीयजननित्यसगतिः

कला वाङ्मय तत्त्वज्ञान
धर्मकारणं मननचिन्तन
वर्षसहस्रंमित जीवन
अपोहिता भीतिः

शान्तिरहिंसा विश्वप्रीतिः ६५०
विविधाचारेऽप्युदारा मतिः
काले प्राचीनेऽपि सततिः
यथा बुद्धनीतिः

जीवनमरणप्रश्नमालिका
निविडकानने सृता जीविका
यत्नैः प्रज्वाल्यते दीपिका
चिरं चरतु दीप्तिः

नवे जीवने विज्ञानमये
प्रविशामो वयमिहमनामये
आकाङ्क्षां धारयाम विजये
नवासा अर्घातिः

भवत्सदिच्छाः सन्तु संगताः
अकण्टकः स्याच्छान्तेः पन्थाः
भविष्यति हि तन्येत सर्वथा
वर्तमानकीर्तिः

---

मियामल्हारराग ।

# ६३

लोकसंमतशासनस्य पथ्य ध्येम च गीयेते। (२८-३-१९५७)

लोकसंमतशासनं
स्वयं स्वीकृतं राज्यबन्धनं

बीजादुदितोऽङ्कुरः कोमलः
अद्यापि लघुः सुकुमारदलः
कालेन भवेत् तरुविशालः
क्रियतां बत संवर्धनं

देशप्रगतेरिदं साधनं
तेनैव च सातत्यगोपनं
द्वयोरवश्यं भव्यं मिलनं
तथैव भूतेरर्जनं

नवेन मान्यं साधु पुराण
पुराणसंमतनव हि शरणं
अज्ञजने ज्ञानसूर्यकिरण
प्रवेश्य तेषां विनयनं

वयं न फलभोक्तारो नूनं
प्रविधेय स्वालवालखनन
पुत्रपौत्रगणजगज्जीवन
भवेच्छ्रमैर्नो नन्दनं

रचयाम महाशिल्पनिवसनं
भाविकालवातालिरोधन
कार्यमायुषो भवतु मण्डन
विन्दत नित्य वन्दनं

---

रामकलीराग ।

# ६४

लोकशासने अधिकारनियुक्तसेवकैरेव वर्तितव्यम् । (५-४-१९५८)

जनसहकाय राज्ययन्त्रणा
लोकशासनी मनोधारणा

प्रगतिसंक्रमणमार्गे निपुणाः ६९०
अधिकारिगणाः कृतिपरायणाः
सत्यभासिमन्त्रणाः

निःपक्षत्वे न कार्यनाशः
मतिर्निश्चिता कृतेः प्रकाशः
न कदाप्यवधीरणा

जागरूकता व्यवस्था तथा
उत्साहिमतिः शीलिना पथा
वाणी जनतोषणा

जनैरभिमता प्रगतिः सुकरा
केवलमाज्ञापिता दुष्करा ७००
सर्वदेयमीक्षणा

अनुपगम्यता नात्र सद्गुणः
न दृढनिश्चयस्तथा ह्यवगुणः
स्वतन्त्रता प्रेरणा

---

सोहनीरागः ।

## ६५

कि जीवन नाम (१५-८-१९५८) ?

वद सत्यं जीवने
शाश्वतशङ्का संसृतिसदने
निरसन कुतो वने निर्जने

प्रतिवचः सदा कालाधीनं
यदुचित पुरा नाद्य शोभन
नवानुभूतिर्नवविज्ञाने
साध्य न नव नवे साधन

सृत पुराण संस्कृतिशिखर
शस्त्रबल भौतिक नच वर
बहवो वादाः समृते घने
नैको मान्यस्तद्विभाजने

दण्डैर्हि जना वोद्धरणीयाः
धर्मस्य भये वा संधार्याः
विलोकये न हितं तन्मनने
नोभयमुचितं ध्येयसाधने

लोकशासनं समाजवादः ७२०
मधुरोऽसौ शब्दानां नादः
किं तु हितं स्यात् व्यक्तिविकसने
नोत्तर सुखं नित्यचिन्तने

कृतिः कृतिः पुनरेव कृतिः सा
विना विश्रम निरलसमनसा
विना फलेन हि कार्यमन्थने
आत्मानुभवो निदिध्यासने

---

गुणक्लीराग. ।

# ६६

समन्वयो भारतविशेषः। (२/५६)

संवादिता प्रकृतिहिता
समन्वये वयमिह महिताः

इतिहासोऽसौ विस्मयावहः
तत्त्वान्वेषकविद्वन्निवहः
वीरचेतसां प्रबलोत्साहः
उदारसंस्कृतिमहाप्रवाहः
प्रगतेः संमुखता

संस्कृतभाषा रुचिरशारदा
न्यायविवेचनचतुरसंपदा
भारतीयजनसुस्थिरबन्धा
प्रचारजयिनी महोपनिषदा
तथैव भारतता

ज्ञानाद् रूढिर्वत बलीयसी
कथं संमता ततः श्रेयसी
कर्मकाण्डरतमहाशेमुषी
तथापि संस्कृतिरियं तस्थुषी
भुवने धुरोणता

नवागतानां भिन्नजनानां
जाता माता धर्मविधानां
कथं नवानां विज्ञानानां
विमुखी भूमिर्वापन्नानां
सुप्ता जागृतता

दमयतु पुनरपि भूमेरोजः
नमयतु हृदयं प्रोत्थानरजः
रमयतु भुवनं प्रगमनध्वजः
गमयतु वक्षसि विजयनस्रजः
जीवनसार्थकता

---

पूरियाधनाश्रीराग । शेमुषी बुद्धि. । तस्थुषी शाश्वत्स्थायिनी ।

## ६७

सयुक्तराष्ट्रसभाधिवेशने-(३-१०-१९६०)

सयुतराष्ट्रसभा
दलितभुवामाधारविभा
घनतिमिरेऽसौ विशदनभाः

शान्तिरवेराभा
जगति नायका. समितप्रतिभाः
वसुधोद्धरणे कोलसनिभाः

शस्त्रनिवहगर्भा
लघुदेशा भुवि सन्तु न गलभाः
तेपा रक्षाऽस्त्वतिसुलभा

नीतिर्हृतदम्भा
बुद्धिसागरो यदि लवणाम्भाः
मधुरजीवनाः कुतोऽत्र कुम्भाः

या समतास्तम्भा
वृक्षैस्तत्र समाः स्युर्दर्भाः
सुखे समे ते कुब्जा रम्भा

नैत उपालम्भाः ७७०
स्युर्नवजीवनरचनारम्भाः
भुवि विराजता शमशुभशोभा

जगत्पुरुषर्षभाः
विरमन्तु रणाः कालविजृम्भाः
मा भूदवनी रुधिरकुसुम्भा

---

चन्द्रकोंसरराग । कोल वराह । या सयुतराष्ट्रसभा समता आधारस्तम्भ मन्यते तत्र तस्या लघुगुरुराष्ट्राना समानता अस्तु वृक्षाणा दर्भाणा इव कुब्जाया रम्भाया इव वा । समानता न गुणेषु कि तु जीवनाधिकारेषु ।

# ६८

देशोत्कर्षाय नियोजनपूर्वं उद्यमनमेव श्रेय (८-।६० ८।६१ ६।६२)

संपद उत्पादन उद्यमनं
राष्ट्रविभूतेरिद निदान
नियोजनं ननु तत्र साधन

अर्जनवृद्धिर्वर्षे वर्षे
अधिकान्नधन लभ्यता कृपेः ७८०
शक्तीन्धनयन्त्रायोर्निर्मितिरस्त्यधिका प्रतिदिन

मनुजबलानामुचितयोजने
विभवविषमतामूलनिरसने
अर्थबलविभाजनसमतायै नवरथ्याविरचनं

कुशलनरैर्ननु नवनिर्माणं
यदि सर्वकपतन्त्रशिक्षणं
यन्त्रनिर्मितिर्नरैः; न यन्त्रैर्मानवसंजीवनं

नियोजने सभवति न विरतिः
निरन्तरा स्याद् वितता प्रगतिः
जनताहितसंवर्धने न वा यत्नानां खण्डनं

स्वजनैर्भाग्यं स्वयं विधेयं
परावलम्बनमहितं हेयं
भौतिकसपद्वैपुल्ये सति संस्कृतिसंगोपनं

---

छायानटराग ।

Notes : सपदः उत्पादने उद्यमन = Industry in the production of wealth
नियोजन = Planning
शक्ति-इन्धन-यन्त्र-मयः—निर्मिति = Production of steel by machines using power as fuel.
सर्वबल-विभाजनसमता = equality in the distribution of economic power.

# ६९

## सुरक्षासमित्या (Security Council) (१०-११-१९६१)

समरदलितभुवन
सहजीवनमिह दु.सहभवनं

सहकार्ये यायादनुचक्रं
शान्तिपथे पततु पदमवक्रं
नाश्रुभिरनुकरवाम हि नक्रं
सुमनसैव यतनं

सहस्रसंवत्सरानुदानं ८००
कालमुखे तिष्ठति प्रतिदिनं
प्राग् वदनपिधानाद् विमोचनं
मा भूयादशनं

शस्त्रवलानां यदि परिहरणं
वृतं तथा भवतादाचरणं
न भवद्भिः स्यान्ननु संहरणं
जगतामुद्ध्वसन

रणभीतेर्यदि न स्यान्मुक्तिः
भवेन्नराणा विरुचिर्भुक्तिः
तर्हि लभ्यता भवदभयोक्तिः
नान्यन्निवेदनं

नाहं विद्वान् परिषद्यस्यां
स्खलितोऽपि तथा क्वचनाहं स्या
निराकुरुत भो भुवनसमस्यां
देयमिद दान

नन्तराग । कालमुखे सहस्रावधिसवत्सराणा मनुदान संस्कृतिः वसति । यदि कालो वदन पिधास्यति सर्वमेव नश्येत् । वदनविधानात् दूर्वमेव विमोचन भवतु संस्कृतं नरजातेश्च कालमुखात् ।

## ७०

आगते परचक्रे— (१।६२)

परचक्राभिगमेन बान्धवाः सहसा जागरिताः
बान्धवाः स्वप्ने किं निरताः

पारतन्त्र्यकर्दमादुध्दृता
त्यागाद्विजितेयं स्वतन्त्रता.
पुनः शिथिलता यदि पुरस्कृता कुतः कन्धरोन्नता

रिपुणा सीमा समुल्लङ्घिता
हिमनगराजी रणनिनादिता
यशोगर्जिता गर्वर्वाजता दुन्दुभयोऽप्याहताः

अहिंसया ननु किं विपण्णता
स्थिता वयस्याः ! इयं संभृता
अहिंसाकथा भवत्यन्यथा सर्वथा न विदिता
()(४)

रणे मतिर्नास्माभिर्निहिता
तथापि संरक्षणे सज्जता
मता निश्चिता जना उत्थिता गलिताऽनुत्साहिता

पूर्वपराक्रमकृतिः स्यात् स्मृता
तथा मातृभूरियं वन्दिता
विजयः पन्थाः विजयग्रन्थाः सन्तु च संपादिताः

---

जीवनपुरीराग. ।

## ७१

शत्रुमार्धं कृते युद्धे विजयो नागर-जन-उद्यमेनैव (४-११-१९६२)

कार्यशक्तितः प्रगतेः पन्था उज्ज्वलितः सर्वदा
यतोऽसौ शक्तिरेव वरदा

उद्यम-कृषि-वर्धनं सत्वरं
शक्तियोजने सफल सुकरं
विना तया सकलापि कर्तृता नून विफलागदा
अपथ्या व्याधिभरानपनुदा

विद्युच्छक्तिर्निर्मातव्या
अस्मिन् राष्ट्रे प्रभूतोदया ८४०
तयाधिगतया दशा जनानां न सा विपन्ना कदा
जीवनं निभृतं स्यात् सपदा

अणुशक्तिरिय परिनिष्पाद्या
उत्पादनकार्ये च नियोज्या
निर्धारितचेतसा विना नच समियाच्चञ्चलपदा
श्रीरिय विपुला निर्गतमदा

नागरिकाणां जीवनयात्रा
समरभरेऽपि च हिता विधात्रा
अतः सतत कार्यमविरत कर्मकारिभिर्यदा
तदैव हि बलवद्राष्ट्र सदा ८५०

सीमादेशे सर्वसैनिका
युष्मदुद्यमजसाह्य उत्सुकाः
मा भूत् तेषा जना ! निराशा कृतिर्भवतु कीर्तिदा
अस्यनामरातिमूर्धनि गदा

---

युद्धकल्याणराग ।

७२

प्रगतिपथे भारता (४।६३)

प्रगतिपथे नवभारताः
शान्तिरता·

महात्मनो नेतृत्वे नियतैः
सत्याग्रहसाधनानुरक्तैः
अहिंसया समरेऽपि निष्ठितैः
परसत्ता हारिता ८६०

इद विशाल लोकशासन
आचारविचारोच्चारघन
उपभोग्यमितो विनिर्बन्धन
दैवत हि जनता

मत-पथ-पूजा-धर्म-समत्वं
उच्चावचताया नास्तित्व
समानावसरसभवतत्त्वं
रमतां बान्धवता

इतिहासं ज्ञात्वा प्राचीनं
उपयुज्य तथा नवविज्ञानं
दारिद्र्याद् विभवं प्रति यान
स्थिता ध्येयगीता

नियोजनभरैर्भूमिविकासः
अपक्षतानीतौ च निवासः
परदेशैः स्यान्मैत्रविलासः
एप जगति पन्था

दुरितैः सर्वैरितो विगम्यं
नाक्रमणैरपि विश्वासोऽय
च्युतो, मानसं सदा निर्भय
यशःपथे नान्ताः

---

मारवाराग ।

## ७३

नायकस्य प्रमुखभूमिका विश्वशांतिदूत ।

—

शान्तिदूतविहिता चरिता
नीतिसहिता महिता

अस्त्रशस्त्रसंचयानिमग्ना
राष्ट्रान्तरद्वन्द्वकलहविलग्ना
स्वभूतिधन्या न कामनाऽन्या सदा मनोविनिहिता

अशनवसनसदनादि यथेष्ट
प्रथमोत्पाद्य ध्येय स्पष्ट
न शस्त्रभाषा न चाभिलाषा हृदयेन सदा वृता

अन्यभुवा नाभिभवः सह्यः
अस्मद्भूमेर्नान्यः कार्यः
विश्वबन्धुता चेतसि निभृता मता पृथिव्यां हिता

रिपुणा प्रहृते मनःसंयमः
प्रकाशितो नो विवेकोद्गमः
न प्रतिवचनं महायोधन न वा निराशा स्मृता

निर्भयता प्रतिराष्ट्रजीवने
पुरस्कृता सा राष्ट्रकुलजने
न कृतोपेक्षा न धृतापेक्षा स्तुतिनिन्दा नादृताः

पृथग्वृन्दता न संमानिता
अपक्षता निःशस्त्रा रचिता
रीतिरहिंसा मनोलालसा सदैवमाविष्कृता

---

गौडसारंगराग ।

# ७४

समाजवादे नियोजनरूप (२५-५-१९६४)।

समाजवादे स्वरूपभङ्गाः
अधस्तलचरी तात्त्विकगङ्गा
उपरिचञ्चला विमततरङ्गाः

उत्पादनमधिकं कृषिविषये
उद्योगक्षेत्रेऽपि तदेव
व्यक्तिविकसनं पुनर्न ध्येयं
धर्मसंभृतिः स्यादुत्तुङ्गा

विज्ञानकृता यदि सहायता
दूरविसृज्या रूढिप्रियता
स्वावलम्बिनी भारतजनता ६१०
भवतु मनोहरजीवनरङ्गा

नास्माकमियं प्रगतिर्मन्दा
बहवो भूमौ व्यर्थविवादा
यशसामागामिनां निनादा
कमलानन्दा गुञ्जद्भृङ्गाः

नवीनदृष्टिः सा स्वीकार्या
अज्ञाननिशा परिसंहार्या
कार्यनिरतवृत्तिर्निर्धार्या
गिरय इमे ननु दुर्गमशृङ्गाः

उज्ज्वलभूतो नित्यसहायः
वर्तमान इह बलेन धुर्यः
सन्तु भविष्यति वरयशःश्रियः
न रुन्धन्तु नः कुतोऽनुषङ्गाः

---

गौडमल्हारराग. ।

# ७५

यदि नायकेन निजनिर्वाण पूर्वंज्ञात स्यात् तर्हि जीवनान्त्यदिने (२७।५।६४) तत्प्रार्थन एतदभविष्यत् ननु ?

नमनं ते चरणे, मातः -
तनुपतनमिद पीडाहरणे

स्वतन्त्रमूर्तिस्त्वं विलोकिता
जनताप्रेम्णा त्वं संगदिता
कतिदा कारा तया, स्वीकृता
न विषादो मरणे

मूर्धा ते भुवने विराजते ६३०
कलङ्कजातं परिनिरस्यते
स्वतन्त्रतादीपो विभासते
यामि चिताभरणे

अद्यापि हि ते सुता निर्धनाः
जीवन्ति यतोऽज्ञानबन्धना
विज्ञानेऽधुतरचिता ज्वलनाः
सदैव जागरणे

सेवाया ते स्थिता लालसा
श्रान्ता दुर्बलतनुर्निरलसा
मनसा न धृता परविकला सा
निपतति कालरणे

तव गर्भगृहे पुनरपि जनन
त्वयैव पुनरपि भवतु लालन
मयापि सेवाशेपविध न
साक्षी त्व तरणे

शिवमतभैरवराग ।

## ७६

निर्वाणम् । (२७ ५-१९६४)

ध्वज ! वितरेः समान
रणवीरेण वृत निर्वाण

येनोन्नमितो ध्वजः सोच्छ्रय
राष्ट्ररणेऽसौ निपतति स्वय
! अवतर, कुरु कृतज्ञनमन

तुङ्गसगता कीर्तिपताका
सिन्धुविधूता प्रवसति नौका
नो नयनैर्न हि पुनर्लोचन

जीवनमरणानादरविरणी
सङ्क्षिप्यति त कष्ट धरणी
उत्सृतकण्ठं कृत विलपन

पततात् देहो धारातीर्थे
मुक्तिरीदृशी राष्ट्रसेविते
सातिशयमिदं पुण्यसाधनं

जीवने सकृत् तव विश्रान्तिः
संततकार्ये नासीच्छ्रान्तिः
स्मरिष्याम इह वचनं वचनं

स्मृतिचिह्नस्मारकाणि बहुधा
भवन्तु निधिसंचयाश्च विविधाः
क्रियेत न हि तैः कार्यमापनं

भारतभूमौ पुनरागमनं
भवतात् भवतो जनतागान
सुवर्णभूमेस्त्वयोद्धारण

---

भैरवीराग. । किरणी किरणवान् सूर्यः । उत् उपरि रतुना. मण्ठाः
यैः तैः सर्वजनैः तस्य मन्त्यदर्शनार्थं ।

# ७७

स्मृतिलेख: ।

नायकेन स्वमुखेनैव प्रकटीकृतोऽय आशय: मद्रासपुर्या १९५२ तमे खिस्ताब्दे ।

यत् केचिन्मां स्मरेयुः क्वचिदपि सुहृदो भाषितव्य तदेतैः
अन्तर्बाह्य जनोऽसौ भरतभुवि तथा भारतीयेषु रक्तः ।
प्रीतिस्थान च तेषा निरतिशयमभूत् सौहृदाबद्धभाव
यावज्जीव ह्यसीम सकलभुवि जनैर्लालितः सर्वथा च' २७

---

जोगीराम. । स्रग्धरा वृत्तम् ।

# पद्यारम्भानां वर्णसूचिः।

## An Index showing the subject matter of each song and the relevant period

| Number of the song | Subject matter in brief | Period |
|---|---|---|
| | **Part I** | |
| 1 | Birth | 14-11-1889 |
| 2 | Childhood | *Upto 1905* |
| 3 | Preparation for life | 1905-1919 |
| 4 | Non-Co-operation Movement | *1921* |
| 5 | Non-violence as means | 1921-22 |
| 6 | Decision to join the movement | 1919-20 |
| 7 | Review of the Movement | 1923-25 |
| 8 | European holiday | 1926-27 |
| 9 | Out of place everywhere | |
| 10 | Lathi charge in Lucknow | 1929 |
| 11 | Socialism | 1929-30 |
| 12 | President of the congress | 1930 |
| 13 | Dandi March | April, 1930 |
| 14 | Imperisonment of Mrs. Kamla Nehru | 1930 |
| 15 | Death of Pt. Motilal Nehru | January, 1931 |
| 16 | Faith in the Leader | February, 1931 |
| 17 | Futility of the Round Table conference | 1931-33 |
| 18 | Disagreement with Fast | September, 1932 |
| 19 | Sudden stoppage of the 2nd Satyagraha - | May, 1933 |
| 20 | Authorship in prison | 1934-35 |
| 21 | Death of Mrs. Kamala Devi | Feby, 1936 |

# शुद्धिपत्रं

| पृष्ठ | पङ्क्ति | अशुद्धं | शुद्धं |
|---|---|---|---|
| २६ | १२२ | भञ्जिता | भञ्जिता |
| ३६ | १९६ | चा | च |
| ३७ | २०६ | श्रमे | श्रमै |
| ४१ | २४४ | वयस्सा | वयसा |
| ४२ | २५३ | विह्नला | विव्हला |
| ४३ | २६७ | नव | नैव; न वा |
| ४४ | २७६ | ह्रित | हृत |
| ४५ | २८७ | सान्तवन | सान्त्वन ; सान्तुवन |
| ५२ | ३५१ | सर्व | सर्वे |
| ५३ | ३६० | जवा. | जनाः |
| ६८ | ५२४ | भारयसे | भारयसे डु सह |
| ६० | ४० | ३० | ४० |
| १२० | ३६१ | बल्ल | बल |
| १२७ | ४६६ | वना | विना |
| १२६ | ४६४ | अधिभौतिके | आधिभौतिके |
| १३१ | ५२३ | पिद | पद |
| १३२ | ५३३ | नयमो | नियमो |
| १३८ | ५८७ | जाजनाना | प्रजाजनाना |
| १३८ | टीका | उच्छि | उच्छ्रित |
| १४७ | ६८८ | वार्य | कार्ये |
| १५२ | ७५१ | प्रोत्थान | प्रोत्थान |
| १५३ | ७६६ | मभुर | मधुर |
| १६६ | ८६३ | द्रम | द्रुम. |
| १६६ | ६२६ | वपादो | विशादो |

# INDEX

of topics referred to

( I = पूर्वजवाहर   II = उत्तरजवाहर )

N B. *Numbers Refer to Lines*